॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

## वरुणकृत

# ॥ सीतास्तुतिः ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

# वरुण उवाच

कूप्याः सरस्याः सरितां यथायः समुद्रमेव प्रविशन्ति सर्वाः ।
उच्चावचास्त्वयि सर्वेऽपि भावाः प्रविश्यास्तं यान्ति नित्यस्वरूपे ॥ १ ॥

यथा जलोत्थं मलमातृणोति जलस्वरूपं सर्वतः सम्प्लुतं यत् ।
त्वदुद्भवा देवि तथैव माया त्वामावृणीते व्यापिका ब्रह्मरूपाम् ॥ २ ॥

क्षारांस्तथा मधुराः सत्य आपो न माधुर्यं क्वचन व्यभिचरन्ति ।
एवं भावाः सदसद्रूपिणोऽपि न ते सत्तां व्यभिचरन्ति कुत्रचित् ॥ ३ ॥

स्वतन्त्रंच ते धाम नित्याव्ययं यत् सत्त्वान्तःस्थं भाति सर्वावतारे ।
तदेवेदं भासते शुद्धसत्त्वमन्तर्हितं तावकं शुद्धरूपम् ॥ ४ ॥

त्वमात्मभूता जगतामन्तरङ्गा माया गुणैर्लक्ष्यसे नो पृथक्त्वम् ।
एकत्वे सद्विदुषां ज्ञानगम्या प्रकाशसे बहिरङ्गेऽपि चार्थे ॥ ५ ॥

विशन्नयोगोलकमन्तरानलः स्वरूपशक्ति वितरति लोहपिण्डे ।
तथा त्वमन्तः प्रविशन्ती जनानां स्वावेशेन स्फुरमाणं करोषि ॥ ६ ॥

त्वदाविष्टं मानसं सज्जनानां कल्याणैस्त्वद्गुणावर्गैरुपैति ।
त्वया विवर्ज्यं हृदयं दुर्जनानां मायागुणैराक्रमितं भवेच्च ॥ ७ ॥

कारुण्यं ते प्रकृतिः सर्वजीवेष्टाभद्रहृद्धाति सामान्यतोऽपि ।
तथाप्यमी दुखस्था भजन्ते स्वकर्मभिः सदविद्याविलासाः ॥ ८ ॥

निर्गुणा सगुणा च त्वं निष्क्रिया चापि सक्रिया ।
असौम्या चापि सौम्या त्वमेकैवानेकरूपिणी ॥ ९ ॥

परा त्वं च पश्यन्तिका मध्यमा त्वं त्वं वैखरी सृष्टिरनन्तरूपा ।
त्वं वर्णरूपा पदवाक्यार्थरूपा त्वं तद्वृत्तिः स्फोटरूपा त्वमेका ॥ १० ॥

यथा नभो दूरतौ नीलवर्णं शुद्धादर्शे प्रतिबिम्बत्वमेति ।
तथैव त्वं प्रविकर्षेण दृष्टेर्मायागुणेषु प्रतिरूपं करोषि ॥ ११ ॥

त्वद्बोधकं वाक्यमेकं वदन्ति ओंतत्सदित्युच्चकैः सम्प्रयुक्तम् ।
तेनाशेषा वेदयज्ञाः क्रियाद्याः सद्वस्तुवर्गा प्रभवन्त्यर्थदाने ॥ १२ ॥

जयं तपश्चापि यज्ञादिकाः क्रियाः प्रकुर्वतां फलवाञ्छापराणाम् ।
श्रद्धारूपा त्वं मनस्यभ्युपैषि यथा शेषः सिध्यति कार्यवर्गः ॥ १३ ॥

जीवन्नैवासौ परेतो मनुष्यो यस्त्वद्रूपं क्वापि जानाति नैव ।
यज्ञेर्दानैस्तपोभिरनाशकाद्यैर्यस्यांभक्तिं स्पृहयन्ति प्रवीणाः ॥ १४ ॥

निन्दावादस्तावको यत्र मातः संजायेताज्ञानिनामासुराणाम् ।
ततो गच्छेद्देवि कर्णौ पिधाय तिष्ठेद्वापि स्वामिर्न यस्त्वदीयः ॥ १५ ॥

त्वन्नामनादामृतसिन्धुमध्ये कृतावगाहो मनुजः श्रद्धया यः ।
तमुग्रसंसारसमुद्र एष सदोत्तरंगोऽपि न संस्पृशव्यहो ॥ १६ ॥

सर्वानु धर्मान् ये परित्यज्य मातस्त्वदङ्घ्रिपोतं संश्रयन्तीह भक्तया ।
ते संसाराब्धिं शनकैरुत्तरन्ति ते वै जना ज्ञातशास्त्रैकसाराः ॥ १७ ॥

यावन्न ते जायते सम्प्रपत्तिर्हस्तग्राहं नैव तावत्करोषि ।
त्वयाङ्गीकृतमेनं मनुष्यं श्रीरामोऽपि प्रभुरुत्तारयेत्किम् ॥ १८ ॥

विश्वास एवाश्रयिणां ते जनानां संसाराब्धौनावमज्जाम एव ।
यज्जानकीचरणसरोजयुग्मे आत्मोपहारीकृत आदाय सर्वम् ॥ १९ ॥

भारोऽप्य शेषस्त्वयि चेत् समर्पितो यो वैदिको लौकिकश्चाप्यशेषः।
न वै तेषामिह चामुत्र किंचित्कर्तव्यं स्याज्जनकनरेन्द्रकन्ये॥ २०॥

नृपोऽप्यसौ भाग्यवतां शिरोमणिर्न ज्ञायते किं कृतवान् पुण्यजातम्।
यदालयालंकरणाय जातया लोकत्रयं शश्वदलंकृतं त्वया॥ २१॥

अहो मातर्वयमिन्द्रादिदेवास्त्वत्सेवकानां नितरामिन्द्रियाणि।
प्रविश्य नित्यं निभृतं पिबामस्त्वदीयलीलाश्रवणादिकाः सुधाः॥ २२॥

अहो इयं मिथिलानामभूमेरनन्यशोभाकरणी वभूव।
आविर्भूता यत्र रामस्य रामा त्वं वै साक्षात्प्रकृतेः पूरुषात्परा॥ २३॥

कीतिस्त्वदीया जनकेन्द्रसम्भवे गङ्गादितीर्थावलिपावनोचिता।
येषामन्तः सम्प्रविष्टा जनानां तं आवलीपावनपावनास्युः॥ २४॥

यस्याः कटाक्षस्पृशिमात्रेण लक्ष्मीर्नारायणस्याङ्कगा सम्भूवः।
ब्रह्माणी च ब्रह्मण उमा शिवस्य तां त्वां श्रयामः सर्वसौभाग्यलक्ष्मीम्॥ २५॥

एकैव त्वं बहुधाऽऽकारयुक्ता रामेन्दुना रमसे रासमध्ये।
तां त्वां परां भक्तियुक्ताः प्रपद्य स्वात्मानमत्यर्थकृताश्च यामः॥ २६॥

त्वदाननेन्दुप्रभवज्योत्स्नया वयं यद्वत्प्रमोदाटविगाश्चकोराः।
स्वानन्दसम्पत्तिसमुद्रगमग्नाः शश्वत्कृतार्थाः सुभगे देवि सीते॥ २७॥

अधिप्रमोदाटवि देवि यद्वदद्विरेफमाला सुखिताङ्गसौरभैः।
तथा मदीयेन्द्रियवृत्तिराजी त्वद्भक्ति सम्पृक्ततयास्तु मोदिनी॥ २८॥

इदं परं संतते कामयामो वयं निजं स्थानमभ्येत्य मा क्वचित्।
दर्पाचिताः किंचिदभूभयत्त्वत्पराङ्मुखा क्वापि न स्याम सीते॥ २९॥

सहजानन्दिनीं तां त्वां प्रयत्नाः शरणं वयम् ।
ब्रह्माण्डानां कोटयोऽपि यस्यां शात्पुरुषाद्बभुः ॥ ३० ॥

इत्युक्त्वा वरुणस्तात दण्डवत्प्रायतद्भुवि ।
रोमाञ्चिताशेषतनुर्भक्तिपीयूषपूरितः ॥ ३१ ॥

## इति श्रीमदादिरामायणे ब्रह्मभुशुण्डसंवादे पश्चिमखण्डे भरतलक्ष्मणीये सीताजन्मस्तुतौ वरुणस्तुतिर्नाम चतुर्विंशोऽध्यायः ॥ २४ ॥